TRIVANDRUM SANSKRIT SERIES.

No. LXII.

# THE SARVAMATASANGRAHA

EDITED BY

MAHĀMAHOPĀDHYĀYA

T. GAṆAPATI SĀSTRĪ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT GOVERNMENT PRESS
1918.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६२.

# सर्वमतसंग्रहः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

महामहोपाध्यायेन

त. गणपतिशास्त्रिणा

संशोधितः ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः १०९३, क्रैस्ताब्दाः १९१८.

# PREFACE.

This edition of the Sarvamatasangraha is based on two palm-leaf manuscripts in Malayalam characters obtained from Mr. Paramesvaran Potti of Changarappalli Mathom. The name of the author is not found in the manuscripts.

The work deals, at first, with the eight Pramânas Pratyaksha and others and then with the six Darsanas or schools of Philosophy. Of these the Laukâyata, Ârhata and Bauddha are the non-Vedic schools and the Tarka, Sânkhya and Mîmâmsâ are the Vedic ones. The Bauddha schools being again sub-divided into Mâdhyamika, Yogâchâra, Sautrântika and Vaibhâshika, the non-Vedic schools become six-fold; and similarly the vedic schools also come to be six, if we split the Tarka into Nyâya and Vaiseshika and the Sânkhya into Sesvara-Sânkhya and Nirîsvara-Sânkhya and the Mîmâmsâ into Brahma-Mîmâmsâ and Karma-Mîmâmsâ. The tenets of Prabhâkara and Kumârila are dealt with under Karma-Mîmâmsâ and the Aupanishada and Paurânika schools are described under Brahma-Mîmâmsa. The doctrines of Nirguna-Brahma and Saguna-Brahma of the Aupanishada schools are then considered and the work then closes with a description of the Paurânika school.

Trivandrum,<br>
31st May 1918.

T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

सर्वमतसंग्रहो नामायं ग्रन्थः, चङ्गारप्पल्लिमठस्वामिनः श्रीयुतपरमेश्वरपोत्तिमहाशयस्य सकाशाल्लब्धं केरलीयलिपि तालपत्रात्मकमादर्शद्वयमाश्रित्य संशोधितः । एतत्प्रणेतुर्नामधेयं ग्रन्थे न दृष्टम् ।

अत्र प्रत्यक्षादीन्यष्टौ प्रमाणानि संक्षेपत आदावुपन्यस्य ततः षड् दर्शनानि निरूपितानि । तत्रावैदिकानि, लौकायता-र्हत-बौद्धभेदात् त्रीणि दर्शनानि, वैदिकानि च त्रीणि, तर्क-सांख्य-मीमांसाभेदात् । तत्रापि माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकभेदेन बौद्धचातुर्विध्याद् अवैदिकदर्शनानि षट् पर्यवसितानि । एवं वैदिकदर्शनान्यपि षट् पर्यवस्यन्ति, तर्कस्य काणादाक्षपादभेदेन, सांख्यस्य सेश्वरनिरीश्वरभेदेन, मीमांसायाः कर्मब्रह्मरूपविषयभेदेन च द्वैविध्यात् । कर्ममीमांसायां च प्राभाकरं कौमारिलमिति यन्मतद्वयं तदपि प्रकाशितम् । ब्रह्ममीमांसकानपि औपनिषदपौराणिकभेदेन द्वेधा विभज्य औपनिषदमतप्रसिद्धां च निर्गुणसगुणब्रह्मवादप्रक्रियां व्युत्पाद्यान्ते पौराणिकमतं निरूपितम् ॥

अनन्तशयनम्
३१-५-१९१८

त. गणपतिशास्त्री.

॥ श्रीः ॥

# सर्वमतसंग्रहः ।

---

## प्रमाणनिरूपणम् ।

इह सम्यगनुभवः प्रमाणम् । सम्यग्ग्रहणं संशयविपर्ययापोहार्थम् । तत्रानवधारणज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वायमित्यादि । मिथ्याध्यवसायो विपर्ययः । यथा द्वौ चन्द्रमसावित्यादि । स्मृतिव्यवच्छेदार्थमनुभवग्रहणम् । संस्कारमात्रजं ज्ञानं स्मृतिः । यथा सा मे मातेत्यादि । प्राचीनानुभववासना संस्कारः । स च सदृशवस्तुसन्दर्शनोद्बुद्धः स्मृतिहेतुः । कथं पुनरनुभवग्रहणेन स्मृतिव्यवच्छेदः, स्मृत्यन्यज्ञानस्यानुभवत्वात् । यथाहुः— 'अनुभूतिः प्रमाणं सा स्मृतेरन्ये'ति । संस्कारमात्रजमिति मात्रचा प्रत्यभिज्ञा व्यावर्तिता । संस्कारसम्प्रयोगाभ्यां जायमानं ज्ञानं प्रत्यभिज्ञा । यथा स एवायं घट इति । नन्वनुभवस्यैव प्रमाणत्वे कुत आगमादिषु प्रमाणत्वव्यवहारः । प्रमाणजनकत्वादेवेति ब्रूमः । तदुक्तं श्रीभगवत्पादैः— "अत्र ब्रह्मविद्योपनिषच्छब्दवाच्या । तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते" इति । तच्च प्रमाणमष्टविधं

G. P. T. 818. 500. 24-5-93.          B

प्रत्यक्षमनुमानमागम उपमानमर्थापत्तिरभावः सम्भव ऐतिह्यमिति ॥

---

प्रत्यक्षनिरूपणम् ।

तत्र सम्यगपरोक्षानुभवः प्रत्यक्षम् । तद् द्विविधं सविकल्पकं निर्विकल्पकं चेति । तत्र संज्ञादिविशिष्टार्थविषयं सविकल्पकं, यथा घटोऽयमिति । तदनुल्लिखितार्थविषयकं निर्विकल्पकं, यथेदमिति वस्तुमात्रानुभवः । तत् पुनर्द्विविधं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्रेन्द्रियसन्निकृष्टार्थविषयमयोगिप्रत्यक्षम् । द्विविधानि चेन्द्रियाणि बाह्याभ्यन्तरभेदात् । बाह्यानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि । आन्तराणि मनोबुद्ध्यहङ्कारचित्ताख्यानि । अर्थाश्च बाह्याभ्यन्तरभेदेन द्विविधाः । बाह्याः शब्दादय आकाशादयश्च । आन्तराः सुखादयो बुद्ध्यादयश्च । इन्द्रियार्थसन्निकर्षस्तु पञ्चविधः संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायश्चेति । षष्ठोऽपि तादात्म्यलक्षणः सम्बन्धः । सोऽयं बुद्ध्यात्मनिष्ठः । न च जडाजडयोस्तयोस्तादात्म्यानुपपत्तिः । काष्ठदहनन्यायेन तदुपपत्तेः । तत्सम्बन्धस्य मायीयत्वेन दुर्घटताया भूषणत्वाच्च । तेना(य)महमस्मीति प्रत्यय उत्पद्यते । तत्रानिदमंश आत्मा स्वतो भासते, चिदेकरसत्वात् । इदमंशो बुद्धिरात्मसंवित्सम्भेदादवभासते, अचित्स्वभा-

वत्वात् । न चाहमित्यात्मैव भाति न बुद्धिरपीति युक्तम् । तस्य स्वप्रकाशत्वेनाहम्प्रत्ययविषयत्वायोगात्, सुषुप्तिमूर्छामरणादिष्वहम्प्रत्ययविलयेऽप्यात्मनो भासमानत्वाच्च । न (च) बुद्धिरेव भासत इति युक्तम् । तस्या जडत्वेनात्मसंभेदं विना भानानुपपत्तेः । तस्मादहमित्यन्योन्यतादात्म्येन बुद्ध्यात्मानौ भासेते इत्यास्थेयम् । आत्मतादात्म्यवत्यां बुद्धौ समवेतत्वात् सुखादीनां ग्रहणं सुख्यहमित्यादि । आत्मतेजोनुविद्धबुद्धिमच्चक्षुस्संयोगाद् घटादिद्रव्यग्रहणम् । तथाविधचक्षुःसंयुक्तसमवायात् तद्गतरूपादिग्रहणं, यथा शुक्लो महानयं घट इति । तथाविधचक्षुःसंयुक्तसमवेतसमवायाद् घटरू(पत्वा ? पा)दिस्थरूपत्वादिसामान्यग्रहणम् । आत्माभिन्नबुद्धिमच्छ्रोत्रसमवायाच्छब्दग्रहणम् । तथाविधश्रोत्रसमवेतसमवायाच्छब्दत्वादिसामान्यग्रहणं, यथा सशब्दमिदं गिरिगह्वरमिति । एवं चक्षुषैव रूपज्ञानम् । श्रोत्रेणैव शब्दज्ञानम् । त्वचैव स्पर्शज्ञानम् । रसनेनैव रसज्ञानम् । घ्राणेनैव गन्धज्ञानम् । अन्तःकरणेनैव सुखादिज्ञानम् । तच्च मनोरूपमर्थप्रतिभासमात्रसाधनम् । बुद्धिरूपं तन्निश्चयसाधनम् । अहङ्काररूपं तस्यात्मन्यारोपहेतुः । चित्तरूपमनुसन्धानसाधनम् । यथा घटोऽयं, घट एवायं, घटमहं जानामि, ज्ञातो मया घट इति च । यदा रूपस्य चक्षुषैव ग्रहणं, तदाधारस्य द्रव्यस्यापि तेनैव ग्रहणम् । एवमन्यान्यपि । शब्दाश्रयस्य तु

व्योम्नो मनसैव। तत्तद्द्रव्यगुणसमवायस्येन्द्रियसंसृष्टैः स्वसम्बन्धिभिः सह विशेषणविशेष्यभावाद् ग्रहणम्। यथा घटे रूपसमवायः रूपसमवायवान् घट इति। लोकालोकतत्त्वसाक्षाज्ज्ञानं योगिप्रत्यक्षम्। तत्र समाधिदशायां चिरकालनिरन्तराभ्यस्तभक्तिज्ञानयोगानुभावपरिशोधिततिमिरपटलेन मनश्चक्षुषैवाहं ब्रह्मास्मीत्यलौकिकस्यात्मतत्त्वस्यैव ग्रहणम्। व्यवहारदशायां भोक्तृभोग्यभोजयित्रात्मकस्य लोकालोकतत्त्वस्य योगपरिभावितमनःसनाथेन शास्त्रचक्षुषा ग्रहणम्॥

---

अनुमाननिरूपणम्।

अविनाभावेन सम्यक् परोक्षानुभवोऽनुमानम्। यथा व्याप्यधूमादिना व्यापकाग्न्यादिज्ञानम्। स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः। स द्विविधः, अन्वयव्यतिरेकभेदात्। तत्र साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः। यत्र यत्र धूमस्तत्र तत्राग्निरिति। साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः। यत्र यत्र अग्निर्नास्ति तत्र तत्र धूमोऽपि नास्तीति। बाष्पधूमादिना अग्न्याद्यनुमानव्यवच्छेदार्थं सम्यग्ग्रहणम्। प्रत्यक्षव्यवच्छेदार्थं परोक्षग्रहणम्। आगमव्यवच्छेदार्थमविनाभावग्रहणम्। तच्च द्विविधं स्वार्थानुमानं परार्थानुमानं चेति। परोपदेशानपेक्षं स्वार्थम्। तदपेक्षं परार्थम्। परोपदेशस्तु त्र्यवयवं वाक्यम्। प्रति-

ज्ञाहेतूदाहरणानि वा उदाहरणोपनयनिगमनानि वावयवाः ।

तत्र (वातिवि?साध्यवत्तया) पक्षवचनं प्रतिज्ञा । यथाग्निमानयं पर्वत इति । लिङ्गवचनं हेतुः । यथा धूमवत्त्वादिति । सम्यग्दृष्टाभिधानमुदाहरणम् । यो यो धूमवान् स सोऽग्निमान् यथा महानस इति, योऽग्निमान् न भवति स धूमवानपि न भवति यथा जलाशय इति वा । दृष्टान्ते प्रसिद्धाविनाभावस्य साधनसाध्यस्य दृष्टान्तोपमानेन पक्षे व्याप्तिव्यापकवचनमुपनयः? । तथाचायं धूमवानिति, न तथायं धूमवान् न भवतीति वा । सहेतुकं प्रतिज्ञायाः पुनर्वचनं निगमनम् । तस्मादग्निमानिति, तस्मादग्निमान् न भवतीति नेति वा ।

तत् पुनस्त्रिविधम् अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिभेदात् । तत्र पञ्चरूपमन्वयव्यतिरेकि । रूपाणि तु पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्ति(म ? र)बाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । साध्यधर्मविशिष्टो धर्मी पक्षः । तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम् । साध्यसजातीयधर्मा धर्मी (विव ? सप)क्षः । तत्र सर्वत्र एकदेशे वा वृत्तिः सपक्षे सत्त्वम् । साध्यविजातीयधर्मा धर्मी विपक्षः । तत्र सर्वत्र हेतोरवृत्तिर्विपक्षाद् व्यावृत्तिः । प्रमाणाविरोधिनि प्रतिज्ञातेऽर्थे हेतोर्वृत्तिरबाधितविषयत्वम् । प्रतियोगिशून्यत्वमसत्प्रातिपक्षत्वमिति ।

अन्वयव्यतिरेक्यनुमानं तु हेतुसाध्ययोरन्वयव्याप्तिमद् व्यतिरेकव्याप्तिमच्च भवतीति पञ्चरूपमुच्यते। तद् यथा—विमतं मिथ्या दृश्यत्वाद्, यद् यद् दृश्यं तत्तन्मिथ्या यथा गन्धर्वनगरादि। यन्न मिथ्या तन्न दृश्यं, यथात्मेति। केवलान्वयि चतूरूपम्। अविद्यमानविपक्षत्वेन विपक्षाद् व्यावृत्त्यभावाद्, तत्सत्त्वे केवलान्वयित्वासिद्धेः। तद् यथा—विमतं सकर्तृकं कार्यत्वाद्, यद् यद् कार्यं तत् तत् सकर्तृकं यथा घट इति। केवलव्यतिरेक्यपि चतूरूपम्। अविद्यमानसपक्षत्वेन सपक्षे सत्त्वाभावात्। यथा—सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कार्यत्वात्। यत् सर्ववित्कर्तृपूर्वकं न भवति तत् कार्यमपि न भवति यथात्मेति। एषु चानुमानेषु प्रतिज्ञाहेतूदाहरणदोषाः परिहरणीयाः। प्रमाणान्तराधिगतार्थत्वं तद्बाधितार्थत्वं व्यर्थविशेषणत्वं व्यर्थविशेष्यत्वं च प्रतिज्ञादोषाः। यथा—अग्निर्दाहकः अनुष्णोऽग्निः अयं महीधरः पिङ्गलाग्निमान् विमतं जगन्मिथ्येति। (असिद्धत्वं विरुद्धत्वं हीनत्वं?) तदेवं प्रतिज्ञाद्युदाहरणान्तैस्तदादिनिगमनान्तैर्वा त्रिभिरवयवैर्युक्तं परोपदेशक्षममनुमानम्। तच्च व्याप्तिभेदात् त्रिधा भिन्नमिति सिद्धम॥

---

आगमनिरूपणम्।

शब्दविज्ञानात् सम्यगसन्निकृष्टार्थानुभव आगमः। प्रत्यक्षव्यवच्छेदार्थमसन्निकृष्टेत्युक्तम्। विप्रलम्भकवा-

क्यीयज्ञानव्यवच्छेदार्थं सम्यगिति । अनुमानव्यवच्छेदार्थं शब्दविज्ञानादिति । विषं पिब आकाशं भक्षयेत्यादिव्यवच्छेदायार्थेति । यथाहुः—

"शब्दविज्ञानजा यार्थेऽसन्निकृष्टे सुनिश्चिता ।
बुद्धिस्तच्छाब्दमानं हि सङ्गिरन्ते विपश्चितः ॥"

इति । स आगमो द्विविधः पौरुषेयापौरुषेयभेदात् । अपौरुषेयो वेदश्चतुर्विधः ऋग्यजुःसामाथर्वभेदात् । षट् च तेषामङ्गानि शीक्षाव्याकरणनिरुक्तच्छन्दोज्योतिःकल्पभेदात् । पौरुषेयस्त्रिविधः पञ्चमवेदोपवेदस्मृतिभेदात् । तत्र पञ्चमवेद इतिहासपुराणभेदेन द्विविधः । इतिहासो महाभारतात्मा । पुराणान्यष्टादशविधानि । तथाच वायवीये—

"दशधा चाष्टधा चैतत् पुराणमुपदिश्यते ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
भविष्यद् नारदीयं च मार्कण्डेयमतः परम् ।
आग्नेयं ब्रह्मवैवर्त्तं लैङ्गं वाराहमेव च ॥
स्कान्दं च वामनं चैव कौर्मं मात्स्यं च गारुडम् ।
ब्रह्माण्डं चेति पुण्योऽयं पुराणानामनुक्रमः ॥"

इति । उपवेदश्चतुर्विधः आयुर्वेदधनुर्वेदार्थवेदगान्धर्ववेदभेदात् । मन्वादिप्रणीतानि वर्णाश्रमधर्मशास्त्राणि स्मृतयः ।

मन्वत्रिविष्णुहारीता याज्ञवल्क्योशनाङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ॥

पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्त्तकाः ॥

यः पुनर्ऋग्गादिलक्षणश्चतुर्विधो वेदः, स पूर्वोत्तरकाण्डात्मना प्रत्येकं द्विविधः धर्मब्रह्मविषयभेदात् । एवं पञ्चमवेदोऽपि, तद्व्याख्यानरूपत्वात् । यथोक्तं वायवीये—

"यो विद्याच्चतुरो वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्याद् विचक्षणः ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति ॥"

इति । तत्र धर्मस्य शुभकर्मसंस्काराकारस्यानात्मत्वे(पि?)न रूपरहितत्वेन चक्षुराद्यग्राह्यत्वादसन्निकृष्टत्वम् । अभ्युदयनिःश्रेयसनिमित्तत्वादर्थत्वम् । ब्रह्मण आत्मत्वेनेन्द्रियाध्यक्षस्य तद्ग्राह्यत्वासंभवादसन्निकृष्टत्वम्, आनन्दरूपत्वादर्थत्वमिति विवेकः ।

अनयोश्च धर्मस्य परोक्षस्वभावत्वात् तज्ज्ञानं परोक्षम् । ब्रह्मणो नित्यापरोक्षात्मतत्त्वलक्षणत्वात् तज्ज्ञानमपरोक्षम् । अन्यथा उभयज्ञानस्यायथार्थत्वापत्तेः । तत्रापि 'भूतं भव्यायोपदिश्यत' इति न्यायेन मन्त्रार्थत्वादसहकृतविधिरूपाच्छब्दात् सम्यगसन्निकृष्टार्थानुभवो धर्मज्ञानम् । 'भव्यं भूतायोपदिश्यत' इति न्यायेन विध्यर्थवादमन्त्ररूपश्रुतिनिवहकृतान्महावाक्यरूपाच्छब्दात् सम्यगसन्निकृष्टार्थानुभवो ब्रह्मज्ञानम् ।

धर्मश्च इष्टानिष्टप्राप्तिपरिहारोपायत्वेन द्विधा भिद्यते । तत्र दर्शपूर्णमासादयः स्वर्गादीष्टप्राप्तिसाधनम् । सर्वभूताहिंसाविधिलक्षणोऽनिष्टपरिहारसाधनम् । ततश्च कृतियोग्येष्टानिष्टप्राप्तिपरिहारसाधनं विधिनिषेधार्थो न कार्यमात्रं, विषं भुङ्क्ष्वेति विधौ बुद्धिपूर्वकारिणामप्रवृत्तेः । नापीष्टानिष्टप्राप्तिपरिहारसाधनम् । उद्गत उडुपतिरिति वाक्यादप्रवृत्तेः । वत्स! स्तनं पिब, अग्निं मा स्पृशेत्यादिलौकिकवाक्येष्वप्येषैव रीतिः । एवञ्च शब्दशक्तिग्रहणमपि कृतियोग्यहितोपाय एव, न कार्ये । यथा गामानयेत्यत्र तद्ग्रहणं हितोपायमात्र एव, यथा पुत्रस्ते जात इत्यत्र तद्ग्रहणम् । ततश्च सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्ये न विवदितव्यम् । विधिवाक्यानि च दृष्टादृष्टफलत्वेन द्विविधानि । तत्र पूर्वकाण्डे कारीरीष्ट्यादीनि दृष्टफलानि । उत्तरकाण्डे आत्मदर्शनाय श्रवणादिविधायकवाक्यानि दृष्टफलानि । तत्प्रामाण्यदर्शनादन्येषां च वेदत्वलिङ्गेन प्रामाण्यमनुमेयम् ।

ब्रह्म च सगुणनिर्गुणभेदेन द्विविधम् । सगुणं च जीवेश्वरभेदेन द्विविधम् । तत्र सत्यज्ञानानन्तादिलक्षणत्वेन श्रुत्युपदिष्टं निर्गुणम् । जगत्कारणत्वादिरूपेणोपदिष्टं सगुणमैश्वरम् । स्वसृष्टप्रपञ्चप्रवेष्टृत्वादिरूपेणोपदिष्टं जीवरूपम् । तैरेतैस्तत्त्वंपदार्थपरिशोधनपरैरुपकृतानि तत्त्वमस्यादिमहावाक्यानि प्रमाणान्तरान-

वगतं परमपुरुषार्थप्रयोजनं च ब्रह्मात्मैक्यमुपदिशन्ति। तदवगमात् परमपुरुषार्थलाभं च तान्येवोपदिशन्ति।

एवं पूर्वोत्तरकाण्डात्मना भिन्नस्य वेदस्याध्ययनविधिपरिगृहीतत्वाद् विवक्षितार्थत्वेन निश्चितस्यार्थविचाराय मीमांसाशास्त्रं प्रवृत्तम्। तच्च विंशत्यध्यायपरिमितं काण्डत्रयात्मकं भवति। तत्र पूर्वमीमांसा द्वादशाध्यायमिता कर्मकाण्डनिष्ठा। तत्सूत्रकर्त्ता जैमिनिः। भाष्यकारः शबरस्वामी। तद्व्याख्यातारौ भट्टकुमारप्रभाकरौ। तयोर्भट्टकुमारेण विधिवाक्यानि भावनापरतया व्याख्यातानि, प्रभाकरेण नियोगपरतया। उत्तरमीमांसा तु द्विरूपा सगुणनिर्गुणब्रह्मनिष्ठा अष्टाध्यायमिता व्यासप्रणीता। तत्र सगुणब्रह्मनिष्ठा देवताकाण्डात्मिकाध्यायचतुष्टयवती। इह भाष्यकारः सङ्कर्षः। तत्र प्रथमेऽध्याये सर्वेषां मन्त्रविशेषाणां देवतातत्त्वप्रतिपादने तात्पर्यमिति प्रतिपादितम्। द्वितीये विध्यर्थवादादेर्वेदशेषस्य मन्त्रदेवताशेषत्वमुपपाद्यते। तृतीये देवतातत्त्वं स्वेच्छाविग्रहत्वादिगुणगणालङ्कृतमिति दर्शितम्। चतुर्थे तत्तद्देवताप्रसादतस्तत्तल्लोकवेषविभूषणैश्वर्यानन्दावाप्तिलक्षणं देवतोपासनफलं निर्णीतम्। एवं मध्यममीमांसा सर्वदेवतात्मनो हरेः प्रतिपादिकेति सगुणब्रह्मपरा भवति।

ज्ञानकाण्डात्मिका तु निर्गुणब्रह्मनिष्ठा। सापि चतुरध्यायमिता। अस्या भाष्यकारः शङ्करभगवत्पादः।

तदेकदेशिनश्च ब्रह्मदत्तभास्कररामानुजानन्दतीर्थादयो मतभेदेन तद्भाष्याभासान् रचयाञ्चक्रुः। इह प्रथमाध्यायेन सर्वेषां वेदान्तानां प्रत्यक्तत्त्वे ब्रह्मणि समन्वयः प्रदर्शितः। द्वितीयेन तत्र प्रत्यक्षादिप्रमाणान्तरविरोधः परास्तः। तृतीयेन ब्रह्मज्ञानस्यान्तरङ्गसाधनानि श्रवणमनननिदिध्यासनानि समूलान्युपदिष्टानि। चतुर्थाध्यायेन सद्यः क्रमेण वा मुक्तिलक्षणं ज्ञानफलमुपासनाफलं चोपवर्णितम्। मुक्तिश्चात्मविद्यास्तमय एव। ततश्चात्मजिज्ञासामपास्यात्मनः सुखदुःखप्राप्तिपरिहारोपायमात्रमन्विच्छन्तमज्ञं पुमांसं प्रति कर्मकाण्डं प्रवृत्तम्। ब्रह्मविष्णुरुद्रेन्द्रसोमसूर्यानिलानलादिदेवतासालोक्यादिसुखकामं प्रति देवताकाण्डं प्रवृत्तम्। अशेषविषयसुखविरक्तं बन्धमोक्षसुखमेव काङ्क्षमाणमात्मतत्त्वजिज्ञासुं पुरुषप्रवरमधिकृत्य ब्रह्मकाण्डं प्रवृत्तमित्यलमतिविस्तरेण।

अनाप्तवाक्यत्वपरस्परविरुद्धार्थत्वादिभिर्बौद्धाद्यारोपिताप्रामाण्यशङ्कापङ्कपरिक्षालनपरत्वात् तदपेक्षितप्रमाणप्रमेयप्रमात्रादिलक्षणनिरूपकत्वाच्च तर्कशास्त्रं वेदोपाङ्गं भवति। तत् तु नैयायिकवैशेषिकभेदेन द्विविधम्। तत्र नैयायिकं षोडशपदार्थनिष्ठमक्षपादोपज्ञम्। वैशेषिकं षट्पदार्थनिष्ठं कणादोपज्ञम्। यत् तु निरीश्वरसेश्वरभेदेन द्विविधं साङ्ख्यशास्त्रं, तदितिहासपुराणेऽन्तर्भूतामिति न पृथग् गण्यते।

अनयोर्निरीश्वरसाङ्ख्यं पञ्चविंशतितत्त्वनिष्ठं कपिलश्चकार। सेश्वरसाङ्ख्यं षड्विंशतितत्त्वनिष्ठं पतञ्जलिरकरोद्, येन पाणिनिप्रणीतस्याष्टाध्यायमितस्य व्याकरणस्य भाष्यमनुगृहीतम्। एवमष्टादश विद्यास्थानानि। तान्येतानि कल्पादौ परमपुरुषेण ब्रह्मणेऽनुगृहीतानि। तथाच श्रीवायवीये —

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं परं तस्माद् विद्यास्त्वष्टादश स्मृताः॥

अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्त्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः॥

स हि सर्वजगन्नाथः सिसृक्षुरखिलं जगत्।
ब्रह्माणं विदधे साक्षात् पुत्रमग्रे सनातनम्॥

तस्मै प्रथमपुत्राय ब्रह्मणे विश्वयोनये।
विद्याश्चेमा ददौ पूर्वं विश्वस्थित्यर्थमीश्वरः॥"

इति। तानि च विद्यास्थानानि मरीच्यादिमुखेन ब्रह्मणा अस्मिल्लोँके प्रवर्त्तितानि युगेऽस्मिन्नल्पायुष्याल्पबुद्धित्वादिदोषाद् मनुष्यैः साकल्येन धारयितुमशक्यानीति परमेश्वरः स्वयमेव व्यासरूपी भूत्वा संक्षिप्तवान्। यथोक्तं द्वितीयस्कन्धे —

"कालेन मीलितदृशामवमृश्य नृणां
स्तोकायुषां स्वनिगमो बत दूरपारः ।
आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
वेदद्रुमं विटपशो विभजिष्यति स्म ॥"

इति । एवमागमप्रमाणं निरूपितम् ।

---

## उपमानादिमानान्तरनिरूपणम् ।

अथोपमानम् । गवयो नाम किंलक्षण इति कृतप्रश्नस्य ग्रामवासिनो यथा गौरेवं गवय इति वनचारिणोऽन्यस्माल्लब्धोत्तरस्य पुंसः पश्चाद् वनं गतस्य यदृच्छया गवयदर्शने यद् गोर्गवयस्य च सादृश्यविषयं प्रत्यक्षप्रत्यभिज्ञानमुत्पद्यते अनेन सदृशी मदीया गौरिति, तदुपमानम् । यथाहुः—

"अव्युत्पन्नपदोपेतवाक्यार्थस्य च संज्ञिनि ।
प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते ॥"

इति । अन्यथानुपपत्तिसम्भूतोऽनुभवोऽर्थापत्तिः । सा द्विधा दृष्टश्रुतभेदात् । तत्र परिदृश्यमाना सवितुर्देशाद् देशान्तरप्राप्तिर्गमनं विना नोपपद्यत इति निश्चयो दृष्टार्थापत्तिः । क्षणिकस्य यागस्य कालान्तरदेशान्तरभाविफलसाधनत्वं श्रूयमाणं तत्संस्कारमन्तरेण नोपपद्यत इति मध्येऽपूर्वनिश्चयः श्रुतार्थापत्तिः ।

योग्यत्वे सत्यनुपलम्भादभावनिश्चयोऽभावप्रमाणम् । यथा इह भूतले घटो नास्तीति ।

संभावितोऽयमर्थ इति जायमानोऽतीन्द्रियार्थनिश्चयः संभवः। यथा सोमसूर्य(वंश)वर्णनादिभिः कृष्णरामाद्यवतारादिनिश्चयः। अनिर्दिष्टप्रवक्तृकात् प्रवादपारम्पर्याज्जायमानं ज्ञानमैतिह्यम्। यथा इह वटे यक्षस्तिष्ठतीति। कुतः पुनरत्रैतावन्ति प्रमाणानीति निर्णीतम्।

"प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
अनुमानं च तच्चाथ साङ्ख्याः शब्दं च ते अपि॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥"

इति न्यायविदां वचनात्॥

---

मतभेदाः।

अनया प्रमाणचिन्तया प्रमातृप्रमेये अपि लक्षिते स्याताम्। प्रमाश्रयः प्रमाता। प्रमाविषयः प्रमेयमिति।

इह द्विविधानि विचारशास्त्राणि वैदिकावैदिकभेदात्। तानि च प्रत्येकं त्रिविधानि मीमांसासाङ्ख्यतर्कभेदाद्, बौद्धार्हतलोकायतभेदाच्च। तत्राद्यत्रिकं वेदमूलत्वाद् वैदिकम्। अपरत्रिकं बुद्धक्षपणकबृहस्पति-

विरचितवेदाभासमूलत्वादवैदिकामिति । एवं षड् दर्शनानि ॥

---

## चार्वाकमतनिरूपणम् ।

तत्र प्रत्यक्षैकप्रमाणवादिनो लोकायतशास्त्रप्रवर्तकस्य चार्वाकस्य मनुष्योऽहं स्थूलोऽहं कृशोऽहमिति प्रत्यक्षसिद्धश्चैतन्यगुणाश्रयो देह एव प्रमाता । उच्चावचदेहरूपेण संभवादेव संहतिं पुनर्विहतिं च प्रतिपद्यमानानि पृथिवीवारिवह्निवायुलक्षणानि चत्वारि तत्त्वानि प्रमेयम् । अर्थकामावेव पुरुषार्थौ, न धर्मः । तन्निष्ठावर्थगान्धर्ववेदावेव च वेदौ । धर्माभावान्नाधर्मोऽपि कश्चित् । अतस्तत्फलत्वेन स्वर्गनरकावपि न स्तः । तदभावाद् देहिनां तत्कल्पको न परमेश्वरोऽपि कश्चित् । मरणमेव च मोक्षः । अर्थकामशास्त्रं लोकायतशास्त्रं च प्रत्यक्षमूलत्वात् तत्रैवान्तर्भूतम् । इदमन्नं क्षुन्निवर्तकम् अन्नत्वात्, ह्यस्तनान्नवदित्याद्यनुमानं च तत्रैवान्तर्भवति, प्रत्यक्षमूलत्वाविशेषात् । अभ्युदयनिःश्रेयसफलो धर्मब्रह्मविषयो वेदस्त्वतीन्द्रियार्थनिष्ठत्वादप्रमाणमेवेति सिद्धान्त । तथाच तद्वचनम्—

"अग्निहोत्रं त्रयो वेदास्त्रिपुण्ड्रं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

त्रयो वेदस्य कर्तारो मुनिभण्डनिशाचराः ।
स्वर्गः कर्तृक्रियाद्रव्यनाशेऽपि यदि यज्वनाम् ॥

भवेद् दावाग्निदग्धानां फलं स्याद् भूरिभूरुहाम् ।
प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ॥
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ।"
इत्यादि ॥

---

क्षपणकमतनिरूपणम् ।

प्रत्यक्षानुमानवादिनोः क्षपणकबौद्धयोर्मध्ये क्षपणकस्यायं सिद्धान्तः— ममायं देह इत्यनुभवाद् देहः स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वाद् भौतिकत्वाद् वा घटवदित्यनुमानात् प्राणचेष्टाचैतन्यस्मृत्यादीनां मृतशरीरेऽनुपलब्धेश्च देहव्यतिरिक्तस्तत्परिमाणोऽणुपरिमाणो वा प्रकाशद्रव्यविशेष आत्माख्यः प्रमाता । अतीन्द्रियार्थो नाभ्युपेयः, अतिप्रसङ्गादिति न युक्तम् । प्रत्यक्षप्रामाण्यस्यातीन्द्रियत्वेनानभ्युपेयत्वापत्तेः । तेनार्हन्मुनिप्रणीतागमप्रामाण्याद् धर्माधर्मस्वर्गनरका अपि सन्ति । धर्माश्च केशोल्लुञ्छनाभिक्षाटनमयूरपिञ्छधारणब्रह्मचर्यानशनानाच्छादनामलस्नानार्हन्नमनतप्तशिलारोहणादयः । अग्निहोत्रादय[२]स्तु वेदोदिता धर्माभासा एव, चराचरप्राणिपीडासाध्यत्वात् । अनाप्तवाक्यत्वपरस्परविरुद्धा[३]र्थत्वादिभिर्वेदस्याप्रामाण्यनिर्णयाच्च । अधर्मः प्राणिहिंसादिलक्षणः । पार्थिवाप्यतैजसवायव्यपरमाणुभिः पुद्गलापरनामधेयैः धर्माधर्मा[४]ख्यप्राणिकर्मप्रेरितैरारब्धानि चराचरशरीराणि सकारणानि प्रमेयम् । परमाणवश्चा

---

१. 'स्याप्यती', २. 'यो वे', ३. 'णिपीडाल' ४. 'र्मात्मकमा' ख. पाठः.

नुमानतः सिध्यन्ति । तथाच प्रयोगः — अणुपरिमा-णतारतम्यं क्वचिद् विश्रान्तं, परिमाणतरतमभावत्वाद्, महत्परिमाणतरतमभाववदिति ।

चेतनाचेतनात्मकं चेदं जगदनेकान्तम् । तज्ज्ञानादहिंसादिधर्मनिष्ठानां देहिनां सततोर्ध्वगतिलक्षणो मोक्षः[1] सिध्यतीति । यथाहुः —

“स्याद्वादः सर्वदैकान्तत्यागात् किंवृत्तचिद्विधेः ।
सप्तभङ्गीनयापेक्षस्तत्त्वज्ञानाय कल्पते ॥”

इति । अनैकान्तिकत्वं चास्तिनास्त्यादिरूपेणानियताकारत्वम् । तच्च सप्तभङ्गीनयेन सिध्यति । कथम् । स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यं, स्यादस्ति च नास्ति च, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति सप्तभङ्गीन्यायः । स्यादित्यनैकान्तिकत्वद्योतको निपातः । किं चेतनाचेतनात्मकं जगदस्तीति पृष्टोऽसौ ब्रूते — स्यादस्तीति । अस्तित्वेनानिश्चितं, जन्मादिमत्त्वादित्यर्थः । एवं स्यान्नास्तीत्यादावपि द्रष्टव्यम्, अनुभूयमानत्वान्नास्तित्वानिश्चयः । नीलसुखादिशब्दवाच्यत्वादवाच्यत्वानिश्चयः । अस्तित्वनास्तित्वयोर्विरुद्धत्वेनैकाधिकरण्यायोगादुभयात्मकत्वानिश्चयः । नास्तीत्यपि वक्तुं योग्यत्वाद-

१. ‘क्षः सेत्स्यती’ ख. पाठः.

स्ति चावक्तव्यं(चेत्य)निश्चयः । अस्तीत्यपि वक्तुमुचितत्वान्नास्ति चावक्तव्यं चेत्यनिश्चयः । अस्तीति नास्तीति च वक्तुमुचितत्वादस्ति च नास्ति चावक्तव्यं चेत्यनिश्चयः । एवमेकान्तस्थितिशून्यं विश्वमवधार्य ततो निर्वेदं प्राप्तः पुमान् योगबलेन सततोर्ध्वगतिलक्षणां मुक्तिमुपैतीति ॥

---

सुगतमतनिरूपणम् ।

आत्मनोऽणुपरिमाणत्वेन युगपदखिलावयवगतवेदनानुसन्धानासंभवाद्, देहपरिमाणत्वे बाह्यवस्तुज्ञानासम्भवाद् घटवदनित्यत्वप्रसङ्गाच्च, सर्वस्यानैकान्तिकत्वे अनैकान्तिकत्वस्यापि तथात्वापत्तेः, 'पतनान्ताः समुच्छ्रयाः' इति न्यायेन सततोर्ध्वगतिरूपस्य मोक्षस्य पतनान्तत्वेन नित्यपुरुषार्थत्वासिद्धेश्च नायं पक्षः प्रक्षीणदोष इति सुगतमतमारभ्यते—

तदिदं शिष्यभेदेन चतुर्धा भिद्यते । शिष्याश्च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकाः क्रमेण विशुद्धितारतम्यभाजः । तत्रोत्तमाधिकारिणो माध्यमिकस्य — शून्यस्वभावः प्रमाता, सुप्तोत्थितस्य शून्योऽहमेतावन्तं कालमासमिति स्मृतिदर्शनात् । पुनरहमस्मीत्यात्मनि सत्त्वप्रतिभानं तत् संवृत्तितत्त्वविषयम् । एवं घटोऽस्तीत्यादिप्रत्ययोऽपि । ततः प्रमेयमपि शून्यमेव, सतो नाशासम्भवात् । एवं प्रमाणमपि वस्तुतः शून्यमेव, सत्त्वे जन्मविनाशानुपपत्तेः । सत्त्वप्रतीतिः संवृ-

त्तिमात्रम् । संवृत्तिर्नामासतः सत्त्वेन भानहेतुः सदसदादिप्रकारानिर्वाच्यस्वलक्षणः पदार्थः । अतः प्रमात्रादित्रिकं वस्तुतोऽसदेव सदात्मना भातीति तदुपदेष्टारं सुगतमुनिं पञ्चबुद्धपरिषेवितं मनोवाक्कायैः सेवमानस्य सर्वं शून्यमिति चिरकालं निरन्तरमुपासीनस्य साधोर्मनसि शून्ये विलीने सति सर्वशून्यतावासिलक्षणो मोक्षः सेत्स्यतीति सिद्धान्तः ।

ततोऽर्वाचीनस्य योगाचारस्य तु—प्रमातुरसत्त्वे प्रमेयस्य शून्यस्य सिद्धिरेव नास्तीति प्रमाता कश्चिदभ्युपेयः । स च स्वप्रकाशः । अन्यथा साधकान्तरापेक्षाप्रसङ्गात् । स्वप्रकाशत्वं च ज्ञानादन्यस्य न (सं)भाव्यत इत्यतोऽहमस्मीति प्रत्यक्षतः देहो नात्मा दृश्यत्वाद् घटवदित्यनुमानतश्च प्रतिपन्नं क्षणे क्षणे प्रलीयमानमुत्पद्यमानं चालयविज्ञानं प्रमाता । प्रवाहस्य स्थिरत्वादेव तस्मिन् स्थिरत्वाभिमानः । योऽहं प्रातर्गजमद्राक्षं स एवाधुना तिमिरनिकरं दृष्ट्वा तं स्मरामीति सेयं ज्वालेतिवद्भ्रान्तिरेव । रूपविज्ञानवेदनासंज्ञासंस्काराख्या पञ्चस्कन्धी क्षणे क्षणे प्राणिकर्मानुसारेण विलीयमानोत्पद्यमाना च स्वभावेन सुरनरनारकरूपेण परिणतिमुपरतिं च यान्ती प्रमेयम् । तत्रेन्द्रियतद्विषयात्मा रूपस्कन्धः । तज्ज्ञानं विज्ञानस्कन्धः । तत्फलं सुखं दुःखं मोहश्च वेदनास्कन्धः । संज्ञागुणक्रियाजातिविशिष्टप्रत्ययाः संज्ञास्कन्धः । इह गौरश्वः पुरुष इत्यादिका संज्ञा । गोत्वाश्वत्व-

पुरुषत्वादिका जातिः। शुक्लो रक्तः कृष्ण इत्यादिको गुणः। तिष्ठति गच्छत्युपविशतीत्यादिका क्रिया । शृङ्गी चतुष्पाद् लाङ्गूलीत्यादिको विशिष्टप्रत्ययः। वेगवेष्टनस्थितस्थापकतादिलक्षणः संस्कारस्कन्धः वेगः शशादेः । वेष्टनं भूर्जादेः । स्थितस्थापकः शाखादेः । तदुक्तलक्षणं प्रमेयम्। तच्चेत् प्रकाशातिरिक्तं, नैव तर्हि प्रकाशेतेति सर्वं ज्ञानाकारमेव । ज्ञानस्य स्थिरत्वे नीलपीतादयः सर्वदा सर्वस्य भासेरन्, न कर्हिचित् कस्यचिदित्यस्थिरमेव । अतो ग्राह्यग्राहकग्रहणात्मकं सर्वमिदं जगदहमित्यालयविज्ञानसन्ताने नित्यनिमग्नम् । तस्माच्चैत्यवन्दनबुद्धागमाभ्यासादिसद्धर्मनिरतस्य सर्वमिदं विज्ञानमेवेति चिरमुपासीनस्य पुंसो विशुद्धविज्ञानसन्तानोदयमयी मुक्तिरिहैव सिध्यतीति सिद्धान्तः ।

तस्मादर्वाचीनस्य सौत्रान्तिकनाम्नोऽन्तेवासिनो विश्वस्यान्तस्थत्वे बहिरसत्त्वेनार्थक्रियाकारित्वासम्भवाद्, भ्रान्तिबाधवैलोम्यप्रसङ्गाद्, ज्ञानस्य ज्ञेयाकारत्वे जडत्वापत्तेश्च तयोः पृथक्त्वमुपेयामिति बाह्यमाभ्यन्तरं चास्त्येव विश्वम्। तच्च स्थिरं चेद् न बीजस्योच्छूनत्वजाताङ्कुरत्वद्रुमत्वपल्लवितत्वपुष्पितत्वफलितत्वाद्यवस्थान्तरापत्तिः परिदृश्यमाना सङ्गच्छत इति क्षणिकस्वलक्षणमास्थेयम् । एवं ज्ञातुः स्थिरत्वे ज्ञानस्यापि स्थिरत्वेन सर्वदा नीलं प्रतीयाद्, न कदाचिदपि पीतं, विपर्ययेण वा। अतो ज्ञाताप्यस्थिर एव। इयान् विशेषः — आन्तरं

ज्ञानं स्वलक्षणं प्रत्यक्षं, बाह्यं नीलाद्यनुमेयमेव। तद् यथा — ज्ञाने ज्ञेयप्रतिबिम्बो बिम्बपुरःसरः, प्रतिबिम्बत्वाद्, दर्पणगतमुखप्रतिबिम्बवादिति। एवञ्च प्रत्यक्षग्राह्यो बाह्यार्थो नास्ति।

वैभाषिकस्यार्वाचीनतमस्यान्तेवासिनो—बाह्यार्थश्च सन्निहितः प्रत्यक्षः, इदं नीलमित्यपरोक्षतयैव प्रतिभासदर्शनात्। तेनानयोरियदेव वैषम्यम्। अन्यत् सर्वं तुल्यम्। एषु च पक्षेषु बुद्ध्याद्यागमानामनुमानमूलत्वेन तत्रैवान्तर्भावाद् न प्रमाणाधिक्यम्। तत्र सौत्रान्तिकवैभाषिकयोः सर्वं क्षणिकमिति शास्त्रेणावगम्य शास्तारं भगवन्तं तथागतं तद्भक्तांश्च सेवमानः सर्वस्य क्षणिकत्वसाक्षाद्बोधे सञ्जाते सति विशुद्धविज्ञानसन्तानतावाप्तिरूपां मुक्तिमेतीति सिद्धान्तः।

एषां त्रयाणामप्यन्ततः शून्यवादित्वम्। कथम्। बाह्यार्थस्य शून्यत्वं योगाचारो ब्रूते। प्रत्यक्षस्य बाह्यार्थस्य शून्यत्वं सौत्रान्तिकः। बाह्यस्यान्तरस्य चास्थिरस्य जगतः शून्यत्वं वैभाषिको भाषत इति। अत्र सङ्ग्रहः—

"मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगद्
योगाचारमते हि सन्ति हि धियस्तासां विवर्तोऽखिलम्
अर्थोऽस्ति क्षणभङ्गुरस्त्वनुमितो बुद्ध्येति सौत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते ॥"

इति ॥

---

## कणादमतनिरूपणम् ।

अत्र जगतः शून्यस्वभावत्वे साधकाभावेनासिद्धिप्रसङ्गात्, सत्त्वानुभवविरोधाच्च, ज्ञानस्य ज्ञेयाकारत्वे जडत्वप्रसङ्गाद्, ज्ञेयस्य बहिरनुपलम्भप्रसङ्गाद्, इदमिति साक्षाद् भासमानस्य नीलस्यानुमेयत्वे अहमिति भासमानस्य ज्ञानस्वलक्षणस्याप्यनुमेयत्वकल्पनावताराद्, ज्ञातुरस्थिरत्वे स्मृतेरनुभूतार्थगामिन्याः संभवायोगाद्, ज्ञेयस्य क्षणिकत्वे स एवायं घट इति प्रत्यभिज्ञायोगाद्, बुद्धिवृत्तिरूपाणां नीलादिविषयज्ञानानामागमापायित्वेऽपि बुद्धिसाक्षिचैतन्यस्य स्थिरत्वोपपत्तेर्विषयोपरागविहीनस्य ज्ञानस्य भेदकाभावेन सन्तानरूपत्वानुपपत्तेश्च, स्वप्रकाशत्वेन स्वतः परतश्चास्य जन्मविनाशावगमासंभवादनवगतार्थस्यासत्त्वानिवारणाच्च क्षपणकादिपक्षवत् सुगतपक्षोऽप्युपेक्षणीय इति वेदप्रामाण्यवादित्वेऽपि तस्यानुमानात्मत्वोररीकरणात् प्रत्यक्षानुमानमात्रप्रमाणवाद्यन्तर्भूतस्य कणादस्य मतमवतार्यते—

इह द्रव्यगुणकर्मसामान्यविशे(षा ? षसमवाया)ख्याः षडेव पदार्थाः । तत्र गुणवद् द्रव्यम् । तन्नवधा भिद्यते । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदात् । तेष्वात्माख्यमष्टमं द्रव्यं प्रमाता । स च पृथिव्यादिलक्षणेभ्यो देहादिभ्योऽन्यो नित्यो विभुः प्रतिक्षेत्रं भिन्नः परमेश्वरपरतन्त्रो जडस्वभावोऽहंप्रत्ययग्राह्यश्च । द्रव्यान्तराणि गुणादयश्च प्रमेयम् । सामान्यवानसमवा-

यिकारणमस्पन्दात्मा गुणः । स च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोग (विभाग) परत्वापरत्वगुरुत्वद्रवत्वस्नेह(त्व ? ) बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारशब्दभेदाच्चतुर्विंशतिधा भिद्यते। तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्वसंस्काराः पृथिवीगुणाः । गन्धवर्जितस्नेहयुक्तोक्तगुणयुक्ता आपः । रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रवत्वसंस्कारास्तेजोगुणाः । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगसंस्कारा वायुगुणाः । संख्यापरिमाणपृथक्त्वसंयोगविभा(गा? गशब्दा) व्योमगुणाः । संख्यापरिमाणपृथक्त्वसंयोगविभागाः कालगुणाः । त एव च दिग्गुणाः । संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा आत्मगुणाः । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगसंस्कारा मनोगुणाः । आत्मनो बुद्ध्यादयो नव विशेषगुणाः । आकाशस्य शब्दो विशेषगुणः । वायोः स्पर्शः । तेजसो रूपम् । अपां रसः । भूमेर्गन्धः । दिक्कालमनसां विशेषगुणा न सन्ति । संयोगविभागयोरसमवायिकारणजातीयं कर्म । तदुत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधम् । नित्यमनेकवृत्ति सामान्यम् । तद् द्विविधं परमपरं च । परं सत्ता, अधिकवृत्तित्वात् । अपरं द्रव्यत्वादि, न्यूनवृत्तित्वात् । नित्याश्रया

अत्यन्तव्यावृत्तबुद्धिहेतवोऽनन्ता अन्त्या विशेषाः । नित्यः सम्बन्धः समवायः । पृथिव्यादिचतुष्टयं नित्यानित्यरूपम् । आकाशादिपञ्चकं तु नित्यमेव । पार्थिवाप्यतैजसवायव्यभेदेन चतुर्विधा नित्याः परमाणवो द्व्यणुकादिक्रमेण परमेश्वरेच्छया देहघटाद्यन्तावयविपर्यन्तं विश्वमारभन्ते । धर्मादयश्चत्वारः पुरुषार्थाः । अग्निहोत्रादिलक्षण ईश्वराराधनादिलक्षणश्च धर्मः । अर्थकामौ धर्माविरुद्धौ । षट्पदार्थतत्त्वज्ञस्य पुंसः परमेश्वरप्रसादाद् नवगुणोच्छेदस्वलक्षणो मोक्षः ।

येनोक्तोऽर्थः प्रतिपन्नः स वेदश्च नित्येच्छाज्ञानक्रियाशक्तिमता परमेश्वरेण शब्दार्थात्मकं जगत् सृष्ट्वा अस्य शब्दस्यायमर्थ इति शब्दशक्तिसङ्केतं च विधाय प्राणिनामभ्युदयनिःश्रेयसप्रयोजनाय प्रणीत इति परमाप्तवाक्यत्वान्न शङ्काकलङ्कवान् । ईश्वरसद्भावश्चानुमानतो निश्चीयते । विप्रतिपन्नं भूधरादिकार्यं सकर्तृकं कार्यत्वाद्, यदित्थं (तत्) तथा यथा घटादीति । अयं घट एतद्घटजनकानित्यज्ञानेतरज्ञानजन्यः घटत्वात्, घटान्तरवदित्यनुमानादैश्वरं ज्ञानमप्यनुमेयम् । न च स्वभावादेव सर्वं कार्यं जायत इति युक्तम् । स्वस्य भावः स्वभाव इति स्वभावशब्दाज्जायमानवस्तुग्रहणे स्वस्मात् स्वोत्पत्तिकथापत्तेः, तत्सम्बन्धिवस्त्वन्तरग्रहणेऽकारणात् कार्योत्पत्तिकथा(त्वा?)पत्तेः, अन्यापेक्षां विनैव कार्योत्पत्त्य-

र्थत्वे घटाद्यर्थिनां मृदाद्यादानवैयर्थ्यापत्तेश्च । अतः कार्यस्य कारणावश्यंभावात्, सावयवत्वात् कार्यत्वेन निश्चितस्य जगतः कारणमनुमेयम् ।

नियतप्राक्सत् कारणम् । तत् त्रिविधं समवाय्यसमवायिनिमित्तभेदात् । कार्यं यत्र समवैति तत् समवायिकारणम् । यथा घटस्य मृत् । समवायिप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् । यथा मृदवयवानामन्योन्यसंयोगः । समवाय्यसमवायिभ्यामन्यदवधृतसामर्थ्यं निमित्तकारणम् । यथा कुलालदण्डचक्रादि । तत्र जगदुत्पत्तौ परमाणवः समवायिकारणम् । तेषामन्योन्यसंयोगोऽसमवायिकारणम् । ईश्वरो निमित्तकारणम् । जन्म च प्रागसतः सत्तासम्बन्धः । स्रष्टस्य विश्वस्य सुखदुःखमयत्वात् प्राणिकर्मणामप्यत्र निमित्तत्वमित्येषा दिक् । 'यतो वे'त्यादिश्रुतयः 'अहमादिश्चे'त्यादिस्मृतयश्च तथाविधाः 'परास्य शक्तिरि'त्यादिका अपि नित्येच्छाज्ञानप्रयत्नानुमानात्मिकाः । एवमन्यास्वपि श्रुतिषु न्यायः । 'ज्योतिष्टोमेने'त्यादिश्रुतिवाक्यान्यनुमानात्मकानि । तैर्हि ज्योतिष्टोमादीनां परमेश्वरसमाराधनक्रियाणां स्वर्गादिफलसाधनत्वं प्रकाश्यते । तत्रैवं प्रयोगः—विमता यज्ञादिक्रिया समीहितफलसाधनम्, ईश्वरपरिचरणत्वाद्, लौकिकेश्वरपरिचरणवदिति । एवमात्मदर्शनाय श्रवणादिविधायकवाक्यान्यपि । तानि हि परमात्मश्रवणादेस्तत्प्रसादजनन-

द्वारेण निखिलदुःखोच्छेदलक्षणमोक्षसाधनत्वं प्रकाशयन्ति । तत्रैवं प्रयोगः—परमात्मबोधो बन्धनिवर्तकः, आत्मबोधत्वाद्, अस्मज्जाग्रद्बोधवदिति । परमात्मज्ञानं तच्छ्रवणादिजन्यं, प्रमाणज्ञानत्वाद्, धर्मज्ञानवदिति च। 'यो वै भूमे'त्यादिश्रुतिवाक्येषु परमात्मनो दुःखासंस्पृष्टस्वभावत्वमेवोच्यत इति निःशेषदुःखोच्छेद एव मोक्षः। स च बुद्ध्यादिगुणान्तरसद्भावे न संभवतीति नवगुणोच्छेदलक्षण इत्याचार्यः कणादः स्मरतीति ॥

अक्षपादमतनिरूपणम् ।

प्रत्यक्षानुमानागमोपमानप्रमाणवादिनोऽक्षपादस्य कणादवत् प्रमातृकल्पना, परमेश्वरस्य प्रमातुरन्यत्वकल्पना, प्रमातॄणामनेकत्वनित्यत्वविभुत्वज्ञानादिगुणत्वकल्पना, जडत्वकल्पना, अहंप्रत्ययवेद्यत्वकल्पना, वेदकल्पना, प्रमेयेषु नित्यानित्य(त्व)कल्पना, परमाणूनां जगदारम्भकत्वकल्पना, धर्मादित्रिवर्गकल्पना, बन्धमोक्षकल्पना, तमस आलोकाभावत्वेन द्रव्यान्तरत्वाभावकल्पना च । इयान् विशेषः— निर्विशेषोऽक्षपादः षोडशपदार्थवादी । तथाच तत्सूत्रं— 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति । षोडशपदार्थतत्त्वज्ञानादनात्मनि देहादावात्मभ्रान्तिप्रभृतीनां मिथ्याज्ञानानां

निवृत्तिः, ततो रागादिदोषनिवृत्तिः, ततः शुभाशुभकर्मनिवृत्तिः, ततो निमित्ताभावान्नैमित्तिकनानायोनिजन्मनिवृत्तिः, ततो गर्भाधिवासादिमरणान्तदुःखनिवृत्तिरित्येवं क्रमेण मोक्षः । तथाचाक्षपादसूत्रं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा*-भावादपवर्गः' इति ।

प्रत्यक्षानुमानागमप्रमाणवादिनो नैयायिकैकदेशिनोऽक्षपादवदेव प्रमाणादिस्वरूपस्थितिः । मोक्षस्तु न दुःखनिवृत्तिमात्रम्, अपितु नित्यसुखस्याविर्भावोऽपि । तस्य जन्यत्वेऽपि निखिलदुःखप्रध्वंसरूपत्वाद्विनाशित्वं चोपपद्यत इति ॥

---

सेश्वरनिरीश्वरसांख्यमतनिरूपणम् ।

त्रिष्वप्येतेषु पक्षेषु आत्मनो जडत्वेन ज्ञातृत्वानुपपत्तेः, बुद्ध्यादिगुणाश्रयत्वेन विकारित्वापत्तेः, चेतनादन्यत्वेन परमेश्वरस्याचेतनत्वापत्तेः, चेतनाभेदस्य च स्वतः परतश्च ग्रहणासंभवाद्, आत्मनोऽहप्रत्ययवेद्यत्वे घटवदचेतनत्वापरिहाराद्, ज्ञानानां चानुव्यवसायज्ञानवेद्यत्वे तस्य स्वप्रकाशत्वाभ्युपगमेऽपसिद्धान्तापत्तेः, परप्रकाश्यत्वेऽनवस्थापत्तेः, ज्ञेयत्वे ज्ञानत्वानुपपत्तेः, वेदस्य पौरुषेयत्वे मूलप्रमाणापेक्षापत्तेः, ईश्वरस्य नित्येच्छादिमत्त्वे नित्यशरीरित्वापत्तेः, मोक्षस्य नवगुणोच्छित्तिरूपत्वे पाषाणादितुल्यतापत्तिदोषात्, सुखस्य दुःखाभावत्वे चेतनस्य नवगुणाश्रयत्वासिद्धेः, सुखाभा-

---

* रापायादपवर्गः इति मुद्रितन्यायसूत्रपाठः ।

वो दुःखमित्यपि वक्तुं शक्यत्वात्, परमाणूनां निरवयवत्वे अन्योन्यसम्बन्धेऽपि स्थौल्यासिद्धेः, सावयवत्वे परमाणुत्वासिद्धेः, 'मायां तु प्रकृतिं विद्यादि'त्यादिश्रुतेर्मायाया एव जगन्निदानत्वश्रवणात्, परमाणुकारणवादस्य श्रुतिविरोधाच्चाविचारितरमणीयत्वमिति सांख्यपक्षोऽवतार्यते—

यद्यपि न्यायैकदेशिनः सांख्यस्य च प्रत्यक्षानुमानागमप्रमाणवादित्वं तुल्यं, तथापि वेदस्याप्तप्रणीतत्वेन प्रामाण्यमक्षपादवत् तदेकदेशिनोऽपि। प्रत्यक्षादीनां च परत एव प्रामाण्यं, तस्य बाधाभावाधीननिश्चयत्वाद्, भ्रान्तिज्ञानानामपि प्रामाण्यं मा प्रसाङ्क्षीदिति। सांख्यस्य तु सर्वे प्रत्यया यथार्थाः, प्रत्ययत्वात्; संप्रतिपन्नवदित्यनुमानेन भ्रान्तिसंशयादिज्ञानान्यनङ्गीकुर्वतः प्रत्यक्षादीनां स्वत एव प्रामाण्यं प्रभाकरवद्, यो निरीश्वरं विश्वं मन्यते। नित्यः शब्दः अमूर्तत्वादाकाशवदित्याद्यनुमानैः,

"नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्।"

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।"

इत्यादिश्रुतिस्मृतिभिश्च वेदस्य नित्यत्वं च[1] समं भट्टकुमारवत्। न च ग्रहणस्मरणरूपाण्येव ज्ञानानि, भ्रा-

---

१. 'च भ' ख. पाठः.

न्तिसंशयज्ञानानभ्युपगमे देहाद्यात्मत्वप्रत्ययानां चैत्यवन्दनादिधर्मप्रत्ययानां च प्रमात्वापत्तेः सन्दिग्धे धर्मिणि न्यायः प्रवर्तत इति संशयाभावेन मीमांसादिशास्त्राणां[1] धूमाद्यनुमानानां चानुदयप्रसङ्गाच्च । न चेह प्रत्यक्षादिप्रामाण्यस्य बाधाभावाधीनसिद्धिकत्वदोषः अज्ञातार्थज्ञापकत्वलक्षणस्य प्रामाण्यस्य भ्रान्त्यादिष्वप्रवृत्तेः । न च भ्रान्त्यादिविषयः पूर्वोत्तरकालयोरस्ति, येनाज्ञाततया तिष्ठेत् । अनयैव रीत्या स्मृत्यप्रामाण्यमूह्यम् । यः पुनः प्रामाण्यस्य बाधाभावात्मकत्वं मन्यते, तस्य कथं स्मृतेरप्रामाण्यम् । न तस्याः पुनर्बाधो दृश्यते। अतो भ्रान्तिसंशयादिज्ञानाभ्युपगमे न दोषः कश्चित् ।

नित्योदितानस्तमितानिर्विषयज्ञानस्वरूपः पुरुषः प्रमातेत्यनयोर्निरीश्वरसेश्वरयोराविशिष्टम् । तस्मिन् जीवपरभेदेन द्वैविध्यं सेश्वरो मन्यते । जीवे सुरनरनारकादिभेदेन त्रैविध्यं चावधारयति । उभयत्रापि पक्षे पुंसः कूटस्थत्वेन सत्त्वरजस्तमोगुणात्मिकायाः प्रकृतेरेव जगदाकारेण परिणामित्वं सृष्टस्य जगतः सुखदुःखमोहात्मकत्वं चानुमतम् । पुरुषप्रकृतिमहदहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमय इति निरीश्वरस्य

---

१. 'णामनु' ख. पाठः.

पञ्चविंशतिस्तत्त्वानि । सेश्वरस्य परः पुरुषोऽतिरिच्यत इति षड्विंशतिः । यथाह —

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति । जन्ममरणादिव्यवस्थया पुरुषबहुत्वं चाह —

"जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥"

इति । पुंसां शुभाशुभमिश्रकर्मभिः संसारं प्रकृतिपुरुषतत्त्वज्ञानेन मोक्षं च —

"धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥"

इति च । उभयत्राग्निहोत्रदर्शपूर्णमासाद्यो यमनियमादयश्च प्रवृत्तिनिवृत्तिलक्षणा धर्माः । प्रवृत्तिलक्षणः संसारहेतुः । निवृत्तिलक्षणस्तत्त्वज्ञानद्वारेण मोक्षहेतुः । इयान् विशेषः— सेश्वरस्य तत्त्वज्ञानसहकृतो योगो मुक्तिहेतुः । इतरस्य योगसहितं तत्त्वज्ञानं मुक्तिहेतुरिति । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो योगाङ्गानि । योगफलानि च द्विविधानि विद्याविद्याभेदात् । तत्र विद्यामयानि भक्तिज्ञानवैराग्याणि । अविद्यामयान्यणिमाद्यष्टैश्वर्याणि । एवमन्या अपि बाह्या योगसिद्धयः । यथाहुः —

"आत्मनो वै शरीराणि बहूनि मनुजेश्वर ! ।
प्राप्य योगबलं कुर्यात् तैश्च सर्वां महीं चरेत् ॥"

इत्यादीनि ।

इह सेश्वरस्य तत्त्वज्ञानसहितेन योगेन योगिनः परमेश्वरतावाप्तिर्मुक्तिः । निरीश्वरस्य योगसहितेन ज्ञानेन प्रकृतिपुरुषविवेकलाभो मोक्षः । कः पुनः सेश्वरपक्षे क्षेत्रज्ञात् परमपुरुषस्यातिशयः । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, क्लेशादिसंस्पृष्टः क्षेत्रज्ञ इति । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । कर्म पुण्यापुण्यात्मकम् । विपाकः सुखदुःखमोहलक्षणं कर्मफलम् । आशयोऽन्तःकरणमिति ॥

---

प्रभाकरादिमीमांसकमतनिरूपणम् ।

अर्थापत्त्या सह प्रत्यक्षादिचतुष्टयप्रामाण्यवादिनः प्रभाकरस्य, अभावेन सह प्रत्यक्षादिपञ्चकप्रामाण्यवादिनो भट्टकुमारस्य च जैमिनीयभाष्यव्याख्यातृत्वे तुल्येऽपि प्रमातृप्रमेययोः प्रमाणवद् विसंवादः । कथम् । यस्याभा(नो?वो) न प्रमाणं तस्य गुरोर्नाभावो नाम कश्चिद् विषयः । किं तर्हि, भूतले घटो नास्तीति केवलभूतलमात्रं प्रकाशते । तमश्च रूपदर्शनाभावमात्रं, न द्रव्यान्तरम् । यस्य पुनरभावः प्रमाणं, तस्य कुमारस्याभावलक्षणोऽपि विषयोऽस्ति । स चात्यन्ताभावादिभेदात्

पञ्चविधः । तत्र शशे शृङ्गस्यात्यन्ताभावः । उत्पत्तेः प्राचीनो घटादीनां प्रागभावः । विनाशोत्तरकालीनः प्रध्वंसः । घटस्य पटाद्यात्मत्वाभावोऽन्योन्याभावः । अपवर(कस्थादीना?कादिस्थाना)मङ्गणादावभावः संसर्गाभाव इति । तमश्च द्रव्यान्तरं, नालोकाभावमात्रम् । नापि रूपदर्शनाभावमात्रम् । कुतः । 'तम आसीद्' इत्यादिश्रुतिविरोधात् । किञ्च आलोकाभावत्वे एकालोकाभावः सर्वालोकाभावो वा तमः । आद्ये सदोपलम्भप्रसङ्गः, एकालोकाभावस्य सर्वदा सर्वत्र सम्भवात् । द्वितीये न कदाचिदपि तम उपलभ्येत, सर्वालोकाभावस्य क्वचिदप्यसम्भवात् । एवं रूपदर्शनाभावपक्षोऽपि दूष्यः । भावत्वेनोपलभ्यमानस्य तमसोऽभावत्वकल्पने प्रकाशस्य तमसोऽभावत्वकल्पना कथं निवार्येत । अभावमनङ्गीकुर्वतो गुरो रूपदर्शनाभावश्च नास्तीति तमसस्तद्रूपत्वकथा कथङ्कारं सङ्गच्छताम् । अभावज्ञानस्य निर्विषयत्वं वदन्नसौ भावज्ञानस्य निरालम्बनत्वं साधयन्तं माध्यमिकं वा कथं निराकुर्यात् । अतो यत्किञ्चिदेतत् । तदुक्तं भट्टपादैः—

'',तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥''

इति । वेदस्य नित्यत्वे स्वतः प्रामाण्ये च सत्यपि मन्त्रार्थवादभागस्योपनिषद्भागस्येतिहासपुराणानां चा-

प्रामाण्यं, विधिशेषत्वेन वा कथञ्चित् प्रामाण्यं, स्वर्भूपाताललोकानां नित्यत्वं, निरीश्वरत्वं, चेतनाचेतनात्मकस्य विश्वस्यानेकत्वं, सत्त्वम्, इन्द्राग्न्यादिदेवतानां विग्रहपञ्चकाभावेन चतुर्थ्यन्तपदमात्रत्वं, धर्मस्याग्निहोत्रदर्शपूर्णमासपशुबन्धसोमयागाद्यात्मत्वं, मोक्षस्यात्मनः स्वरूपावस्थानात्मकत्वं च गुरुकुमारयोरविशिष्टम्। इयान् विशेषः। गुरोः सर्वज्ञानानि यथार्थानि, भ्रान्तिसंशयादिज्ञानानामविवेकमात्रत्वात्। प्रत्यभिज्ञाच प्रागज्ञातघटादिस्थाय्यवगाहित्वेनानुभव एवान्तर्भवतीति ग्रहणस्मरणरूपेण द्वैराइयमेव ज्ञानम्। तेषां च स्वप्रकाशत्वं सांख्यादिवत्। ज्ञानस्यापि ज्ञानान्तरवेद्यत्वे तस्यापि तथात्वमित्यनवस्थापत्तेः, ज्ञेयत्वे घटवदज्ञानत्वापत्तेश्च। ज्ञाता तु वैशेषिकादिवज्जडद्रव्यविशेषो बुद्ध्यादिधर्माश्रयोऽत एव देहादिविलक्षणो नित्यो विभुर्लोकत्रयं कर्मवशाद् भ्रमन् प्रत्यक्षादिप्रमाणकः कर्तृभोक्तृ(त्व)स्वभावश्च भवति। तस्य जडत्वेऽपि ज्ञानाश्रयत्वेन प्रकाशनाद् ज्ञातृत्वम्। घटादेर्विषयत्वेनावभासनाद् ज्ञेयत्वमित्यतो घटमहं जानामीत्यत्र स्वतो ज्ञानं, तदाश्रयत्वेन ज्ञाता, तद्विषयत्वेन घटश्च प्रकाशत इति त्रिपुटीप्रत्यक्षवादी गुरुर्भाषते[1]। तथाच तद्वचनं—

"बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः।
नानाभूतः प्रतिक्षेत्रमर्थभित्तिषु भासते॥"

१. 'ते। भेद' ख.पाठः.

इति। भेदश्चास्यान्यानपेक्षि स्वरूपमेव, न धर्मः। तथात्वे भेदान्तरापेक्षाप्रसङ्गात्।

विध्यर्थश्च यागादिविषयो नियोग एव। असौ मानान्तरायोग्यत्वादपूर्वमिति, कृतिसाध्यत्वात् कार्यमिति, कृत्युद्देश्यत्वात् प्रधानमिति चोच्यते। स्वसाधकस्य नियोज्यस्वर्गादिफलदत्वं तु न स्वातन्त्र्यभङ्गाय। (अस्मिन्प्र? )अतोऽग्निष्टोमेन स्वर्गकामो यजेतेत्यस्मिन् वाक्ये यजेतेत्यत्र प्रत्ययांशेन लिङा नियोगः प्रतीयते। सुखवासकामो मां भजेतेति राजवाक्यवत्। स च कस्यचित् कस्मिंश्चिद् विषये प्रसिद्ध इति यजतिधातुलक्षणया प्रकृत्या विषयः, स्वर्गकाम इति नियोज्यश्च समर्प्यते। अग्निष्टोमेनेति तृतीयाश्रुत्या कस्मिन् यागे नियोग इति विशेषार्पणम्, अधिकारिणः स्वर्गकामत्वविशेषणेन नियोज्यविशेषार्पणं च कृतम्। तस्मादयमर्थः— स्वर्गकामस्य ज्योतिष्टोमयागे नियोग इति। अन्येऽपि विधयः 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायादेतदङ्गविधयः। मन्त्राश्चानुष्ठानस्मारका इत्येतदङ्गतां भजन्ते। अर्थवादाः फलप्राशस्त्यप्रकाशका इति तेऽपि तत्साधकनियोगचिकीर्षापादकत्वाद् विधिं प्रत्युपकुर्वन्ति। एवमन्यत्रापि न्याय इति।

---

१. 'क्षभेदिस्व' क. पाठः.।

गुरोरपि गुरोः कुमारस्यानुभवस्मरणप्रत्यभिज्ञाभेदेन, अनुभवेऽपि सम्यङ्मिथ्यासंशयभेदेन चानेकविधानि ज्ञानानि कणादाक्षपादपतञ्जल्यादिवत् । ज्ञाता तु द्रव्यबोधस्वरूपः प्रत्यक्षानुमानार्थापत्त्यागमप्रमाणकश्च । तत्र ज्ञेयविलक्षणस्वभावत्वाद् ज्ञानरूपत्वं, बुद्ध्यादिगुणाश्रयत्वाद् द्रव्यत्वम् । न च ज्ञानाश्रयस्य द्रव्यस्य ज्ञानादन्यत्वान्न ज्ञानसंभेदः सम्भवतीति वाच्यम् । प्रकाशनिदानत्वेन तस्मादन्यस्यापि सवितृमण्डलस्य प्रकाशत्वदर्शनात् । जडाजडाकारत्वमन्तरेणात्मनोऽस्मत्प्रत्ययविषयत्वासिद्धेश्च । यत् पुनर्भ्रान्तिज्ञानानामविवेकात्मकत्वमिति । तन्मन्दम् । अभावमभ्युपगच्छतोऽख्यातेर्विवेकाभावस्वरूपस्याविवेकस्य वक्तुमयोग्यत्वात् । कयोर्वेहाविवेकः । ग्रहणस्मरणयोश्चेद्, न । इदं रजतमिति पुरोवर्तिरजततादात्म्यानुभवात्मकत्वाद् भ्रमस्य । अतो रजतानुभवसंस्कारवतः पुंसः काचादिकरणदोषात् सादृश्यादिविषयदोषाच्च सितभास्वरवस्तुमात्रतया इदमिति प्र(ति)पन्नस्य शुक्तिशकलस्यैव स्मर्यमाणरजतात्मना भानं भ्रान्तिः । घटसुखादिज्ञानानि चानुव्यवसायज्ञानगम्यानि । अयं घट इति ज्ञानस्य घटमहं जानामीत्यौत्तरकालिकज्ञानेन विषयीक्रियमाणत्वात् । न चात्रानवस्था, द्रष्टुरतः परं जिज्ञासाभावात् । भेदश्च न भेदिस्वरूपमात्रं, भेदशब्दस्य घटादिशब्दपर्यायत्वापत्तेः, अन्यापेक्षसिद्धिकस्य भेदस्य स्वरूपत्वायोगाच्च ।

न च भेदिधर्मत्वेऽस्य भेदान्तरापेक्षादोषः, स्वपरानिर्वाहकत्वोपपत्तेः आत्मवत्। स हि सर्वं वस्तु जानन्नात्मानमपि जानाति। भावना च विध्यर्थः। सा च किं केन कथं वेत्यंशत्रयवती(प्रतीयाः?)। तत्र किमित्यंशपूरणाय स्वर्गकामपदम्। केनेत्यंशपूरणाय यजतिः प्रकृत्यंशः। तद्विशेषप्रकाशनायाग्निष्टोमेनेति प्रकृत्यंशः। तृतीयालक्षणः प्रत्ययांशस्तस्य करणत्वख्यापनाय। न च क्षणिकस्य यागस्य कालान्तरीयफलसाधनत्वासंभवः। यजमानसमवेतस्वसंस्कारद्वारेण तत्संभवात्। कथं भावयेदित्यंशार्पकाः प्रयाजादिविधयः। तस्मादयमर्थः — ज्योतिष्टोमयागेन तत्कामः स्वर्गं भावयेदिति।

अनयोः पक्षयोर्य आत्मनः स्वरूपावस्थितिलक्षणो मोक्षः, सोऽपि कर्मणैव लभ्यः। कथम्। प्रतिषिद्धानि काम्यान्यपि कर्माण्यकुर्वतः पुण्यपापात्मकनिमित्ताभावान्नैमित्तिकोर्ध्वाधोमध्यलोकगतिविहीनस्य प्रत्यवायपरिहारार्थं नित्यनैमित्तिकानि चानुतिष्ठतः प्राचीनानि शुभाशुभकर्माणि च फलभोगेन क्षपयतश्च यजमानस्यायत्नतो ज्ञानमन्तरेणैव स्वरूपावस्थितिर्भवतीति।

स्यादेतत्। गुरुकुमारयोरसर्वज्ञत्वे सर्वज्ञत्वे वा निरीश्वरं विश्वमिति वचनमविश्वास्यम्। आद्ये अल्पज्ञ(त्व?)वाक्यत्वादन्त्ये विप्रलम्भकवाक्यत्वाच्च। यः सर्वज्ञः स एवेश्वर इत्यौपनिषदैरास्थितत्वात्। एवं

ता(भ्यामु)पासितयोर्जैमिनिशबरस्वामिनोरपि वचनमविश्वास्यमेव । अथ तैस्तार्किकाभिमत ईश्वर एव निरस्तो नोपनिषदभिमतः क्षेत्रज्ञस्वरूपभूत इति चेत् । तन्न । 'कर्मैव देहिनामिष्टानिष्टफल(दं) नेश्वर इति वदतां वेदस्य धर्मैकनिष्ठतां चाभ्युपगच्छतां क्षेत्रज्ञस्वरूपस्येश्वरस्याकिञ्चित्करत्वात् , प्रमाणप्रतिपन्नत्वाभावाच्च। अनुमानप्रमाणकत्वं च परमेश्वरस्य स्वैरेव निरस्तमागमस्य धर्मैकपरत्वं च साधितमिति किंप्रमाणकः स्यात् । स्वरूपावस्थानलक्षणो यो मोक्ष उक्तः, तत्रापि किमात्मा प्राक् स्वरूपावस्थितः, किं वा न । आद्ये न मोक्षस्य कर्मसाध्यत्वम् , उत्पत्त्याप्तिविकृतिसंस्कारात्मकत्वात् कर्मफलस्य सिद्धस्य चोत्पत्त्याद्यसंभवात् । नापि द्वितीयः । प्रागविद्यमानस्य रूपस्य स्वरूपत्वानिर्वाहात् । अव्यभिचारिरूपं हि स्वरूपं भाष्यते । कर्मसाध्यत्वे मोक्षस्य नित्यपुरुषार्थता च न स्यात् , यत् कृतकं तदनित्यमिति न्यायात् । जडात्मवादे कैवल्यस्य शून्यकल्पता चापरिहार्या पाषाणकल्पता वास्थेया ।

यत् पुनर्द्रव्यबोधस्वरूप आत्मेति । तदप्यसत् । बोधाबोधयोरभेदाभ्युपगमे सदसदादिष्वप्यैक्यप्रसक्तेः। ज्ञानस्यानुव्यवसायज्ञानगम्यत्वं चायुक्तम् । ज्ञेयं च तद् ज्ञानं चेति विरोधात् । अनुव्यवसायज्ञानस्य स्वसिद्धावन्यानपेक्षत्वे पूर्वज्ञानस्यापि तथात्वसंभवात् ।

आत्मन्यप्यसिद्धस्य ज्ञानस्यार्थप्रकाशकत्वे अर्थस्य ज्ञानप्रकाशकतापि स्याद्, अविशेषात्। अतः सर्वज्ञानानां स्वप्रकाशत्वमास्थेयम्। तेषां च बुद्धिवृत्तिविशेषत्वेन जडत्वान्न स्वतः प्रकाशात्मकता सङ्गच्छत इति चिदात्मसान्निध्यादेव तथात्वमास्थेयम्। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। यत् पुनर्भेदस्य भेदिधर्मत्वमादाय स्वपरनिर्वाहकत्वेनानवस्थादोषनिरसनं, तदप्यचारु। रूपरसादीनां धर्माणां धर्मिभ्योऽन्योन्यतश्च भेदासिद्धेः। न खलु धर्माणां धर्मान्तराश्रयत्वं सम्भवतीति। किञ्च सर्ववस्तूनां भेदो नामैकः, किं वानेकः। एकोऽपि किं जडः किं वाजडः। आद्ये नाजड आत्मन्यसौ सम्भवति। दृशि दृश्यान्वयायोगात्। द्वितीये त्वात्मन एव भेदशब्दार्थतापत्तिः, एकस्य सर्वगतस्याजडस्य वस्तुनस्तल्लक्षणत्वात्। अचेतनश्चेत् स किं भेदान्तरमपेक्षते, किं वा नापेक्षते। अपेक्षते चेदनवस्था। नापेक्षते चेद् भेदमनपेक्ष्यैव भेदिनोऽप्यने (का?के) स्युर्भेदवत्। तस्मात् स्वरूपत्वेन धर्मत्वेन वा भेदो न निर्वोढुं शक्यः शक्रेणापीति। कथं चेतनाचेतनप्रपञ्चस्य भेदः। कथं वा जीवेश्वरभेदः। तस्मात् कर्ममीमांसकमतमपि श्रेयस्कामैर्नोपादेयमिति ब्रह्मवादिमतमवतार्यते।

ब्रह्मवादिनोऽपि द्विविधाः। औपनिषदाः पौराणिकाश्च। औपनिषदा अपि द्विविधाः सगुणब्रह्मप्रधाना

निर्गुणब्रह्मप्रधानाश्चेति । तत्र सगुणब्रह्मप्रधाना रामानुजादयः। निर्गुणब्रह्मप्रधाना आचार्यभगवत्पादादयः ।

---

सगुणब्रह्मवादिमत निरूपणम् ।

तेषु सगुणनिष्ठानां[2] जीवेश्वरजगद्भेदः सत्य एव । तन्निदानभूता मायापि भगवच्छक्तित्वात् सत्यैव । सतस्तिलादेः शक्तीनां सद्भावदर्शनात् । अघटितघटयितृत्वेन तस्यां मायात्वव्यवहारः, नावस्तुत्वात्[3] । 'इन्द्रो मायाभिः पुरुरूप ईयते' इतिश्रुतेस्तस्याः प्रतिजीवं भेदश्चास्तीति युगे युगे मुमुक्षवो जीवा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुर्व्यूहात्मनो भगवतः श्रवणकीर्तनध्यानपूजनानि भक्तिश्रद्धापूर्वमनुतिष्ठन्तो भगवत्प्रसादेन जन्मादिसंसारकर्त्रीं तन्मायामतिलङ्घ्य सेवानुरूपं सालोक्यसारूप्यसामीप्यसायुज्यलक्षणं मोक्षमिच्छन्ति । भगवत्प्रसादशून्यास्तु तन्मायाव्यामोहिता इह संसरन्तीति सिद्धान्त[4]सङ्ग्रहः । यथोक्तं शारीरकसङ्ग्रहकृद्भिः —

"अज्ञानानि बहून्यसंख्यवपुषो जीवान्मुमुक्षूनपि
ज्ञानाज्ञानसमाश्रयादनुयुगं तेषां च निःश्रेयसम् ।
मायामीश्वरसंश्रयादनुगमात् संसारसंवर्धिनीं
केचिद्देवानिघातनिघ्नमनसः संचक्रुरल्पश्रुताः ॥"

---

१. 'ना म' ख. पाठः. २. 'नां जगज्जीवेश्वरात्मकश्चैतत् स' ख. पाठः. ३. 'त् तस्याः' ख. पाठः. ४. 'न्तः देवमायाविमोहितानामल्पश्रुतानामेतस्य सिद्धान्तस्यावस्तुभूतजगज्जीवेश्वरभेदवस्तुत्वभ्रान्ति' ख. पाठः.

इति । दैवनिघातनिघ्नमनसोऽल्पश्रुता इति तन्मतस्यावस्तुभूतजगज्जीवेशभ्रान्तिमूलत्वेनापेक्षणीयत्वमभिहितमाभियुक्तैः ।

---

निर्गुणब्रह्मवादिमतनिरूपणम् ।

निर्गुणब्रह्मप्रधानानां शङ्करभगवत्पादादीनामौपनिषदानां पौराणिकानां च षड्विधाष्टविधप्रमाणवादिनां परमार्थतः सच्चिदानन्द[1]ब्रह्मैकमेव तत्त्वम् । तच्च न मानान्तरगतम् । प्रमातृप्रमाणप्रमेयात्मकस्य विश्वस्य तास्मिन् कल्पितत्वेन ततः पृथगसत्त्वात्, स्वतो जडत्वेन तदधीनप्रकाशत्वाच्च । तदभावोऽपि न चिदात्मानमनाश्रित्य प्रकाशेत, अप्रकाशस्वभावत्वात् । किं पुनर्भावा घटपटादयः, आत्मैव चेद् वस्तु । यदि च सोऽखण्डात्मा, कुतो जगज्जीवेश्वरात्मकं द्वैतमवभासते । स चेन्न वस्तु, न चैकस्सः, कुतस्तरां विश्वं भासेत । न खल्वेकं स्वप्रकाशं च तत्त्वमनपेक्ष्यानेकात्मकस्य जडस्य विश्वस्य सिद्धिः साधयितुं शक्यते । द्वैतस्य चेदेकान्ततोऽसत्त्वं, तर्हि कुतः सत्त्वप्रातिभासः । अधिष्ठानसत्तयेति ब्रूमः । यथा शुक्तिसत्तया रजतसत्त्वप्र(ती?)तिभासः । सा हि इदमि सितभास्वरवस्तुमात्रत्वेन ज्ञातापि स्वेन रूपेणाज्ञाता सती रजतानुभवसंस्कारवतः पुंसः स्वाविद्याविजृम्भितरजताभासात्मना भासते । एवमात्माप्यहमिति प्रकाशद्रव्यमात्रत्वेन ज्ञायमानोऽपि सच्चिदानन्दात्मकेन स्वेन रूपेणाज्ञातः सन्नात्माविद्या-

---

१. 'न्दधनब्र' ख. पाठः.

विजृम्भितजगज्जीवेश्वरात्मकं भेदप्रपञ्चमात्मानि पश्यतीति। अस्मिन् पक्षेऽपि व्यवहारदशायां दृग् दृश्यश्चेति द्वौ पदार्थौ। तत्र दृश्यं माया। दृक् तदधिष्ठाता पुरुषः। माया च न सती, सत आत्मनोऽन्यत्वात्, शुक्तिरूप्यवन्मिथ्याभूतजगन्निदानत्वात्, अधिष्ठानतत्त्वज्ञानबाध्यत्वाच्च। नाप्यसती, विश्वनिदानत्वाद्, मामहं न जानामीत्यपरोक्षत्वाच्च। नापि सदसती, सत्त्वासत्त्वयोरन्योन्यनिषेधरूपत्वेनैकाधिकरण्यासम्भवात्। परिशेषादनिर्वचनीयेत्यायातम्। सा च नात्मनो भिन्ना। अनुपलब्धिप्रसङ्गाद्, अत्यन्तासत्त्वापत्तेश्च। नाप्यभिन्ना। जडाजडयोरैकात्म्यायोगात्। नापि भिन्नाभिन्ना, भेदाभेदयोः परस्परनिषेधात्मनोरविवादमेकत्र वर्तनानुपपत्तेः। न सावयवा, कार्यत्वापत्तेः। न निरवयवा, विश्वपरिणामित्वात्। नचोभयरूपा, विरोधात्। तस्मादविचारितरमणीया काचित् परमात्मनः शक्तिरेव माया। सा च त्रिगुणमयी। सत्त्वरजस्तमांसि गुणाः। तथात्वं च मायायास्तत्कार्ये जगति सुखदुःखमोहमयत्वदर्शनाच्छ्रुतेश्च। इयमेव क्वचिदविद्येति क्वचित् प्रकृतिरिति क्वचिदक्षरमिति क्वचिच्छक्तिरिति क्वचिन्मोह इति चोच्यते। (तद्वत आत्मनः सकाशादाकाशादीनि पञ्च भूतानि तेभ्यश्चिदात्माधिष्ठितेभ्यः समष्टिव्यष्टिशरीराणि चोत्पद्यन्त इति वेदान्तिनः। पौराणिकास्तु द्वैतस्य चाधिष्ठानसत्तयैव शब्दप्रातिभासः,

यथा रजतस्य। अस्मिन् पक्षे व्यवहारदशायां दृग् दृश्यं चेति द्वौ पदार्थौ। दृश्यं माया। दृक् पुरुषः। अविचारितरमणीया परमात्मनः शक्तिरेव माया। ?) सा च त्रिगुणमयी एका च 'अजामेकामि'त्यादिश्रुतेः। 'इन्द्रो मायाभि'रिति तद्बहुत्वश्रवणं चावयवभेदादेव। इयमेवाविद्यादिशब्दैरभिधीयते। तद्वत आत्मन आकाशादीनि जायन्ते। तेभ्यः समष्टिव्यष्टिरूपाणि शरीराणि चोत्पद्यन्त इति वेदान्तिनः।

---

पौराणिकमतनिरूपणम्।

पौराणिकास्तु मायाशबलात् परमात्मनो महान्। महतोऽहंकारः। स च द्रव्यज्ञानक्रियाशक्तिभेदेन त्रिरूपः। तत्र द्रव्यशक्तेस्तामसाहंकाराच्छब्दादितन्मात्राण्याकाशादिभूतानि च जायन्ते। ज्ञानशक्तेः सात्त्विकाहंकाराद् दिगादिचतुर्दशकरणदेवता अन्तःकरणानि च जायन्ते। क्रियाशक्ते राजसाहङ्काराच्छ्रोत्रादीनि वागादीनि च जायन्ते। तान्येतानि महदाद्यवन्यन्तानि मायाविना पुरुषेण प्रेरितान्यन्योन्यं मिलित्वा हैमं ब्रह्माण्डमारभन्ते। तत्र च चतुर्दश भुवनानि चतुर्विधशरीराणि च भवन्तीति, तेषु च देहेषु सर्वनिदानभूतश्चिदात्मा साक्षित्वेनाभिमानित्वेन प्रविशति। साक्षी परमेश्वरः। अभिमानी जीवः, 'द्वा सुपर्णे'त्यादिश्रुतेः, 'ईश्वरः सर्वभूतानाम्' इत्यादिस्मृतेश्च। एवं चानयोः पक्षयोर्भूतभौतिकलक्षणं मायाकार्यं प्रमेयम्। प्रत्यक्षा-

दीनि षडष्टौ वा प्रमाणानि। जीवः प्रमाता। स प्रत्यक्षानुमानगम्यः प्रतिक्षेत्रं मायया भिन्नः। परमेश्वरस्तर्कापरपर्यायानुमानसहकृतश्रुतिप्रमाणतो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वशक्तिर्गुणत्रयात्मिकया मायया विश्वसृष्टिस्थितिसंहारतिरोभावानुग्रहलक्षणैः पञ्चविधैः कृत्यैः स्वात्मन्येव विहरति । सर्वक्षेत्रेष्वेक एव स्थितः सन् सर्वान् क्षेत्रज्ञान् नियमयति च। न चैकस्मिन् नियाम्यनियामकभावासंभवः । मायीयभेदाश्रयेण तत्संभवात् । एवं द्वैतप्रपञ्चः सर्वो मायामयः। अद्वितीयं ब्रह्मैव परमार्थतोऽस्ति । अनयोर्मतयोर्बन्धस्याविद्यानिबन्धनत्वात् तन्निवृत्तिरेव मोक्षः। स च 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुत्या आत्मदर्शनमनूद्य तत्साधनत्वेन श्रवणादिविधानाद्, वेदान्तश्रवणादि कुर्वतो विवेकादिसाधनसम्पन्नस्य पुंसो भगवच्चरित्रश्रवणादिभिः परिशोधितान्तःकरणस्याहं ब्रह्मास्मीति जीवपरैक्यसाक्षाद्बोधे सति सिध्येदित्यखिलमनाविलम् ॥

---

शुभं भूयात् ।

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas) | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II. 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkasarvaswa of Vandyaghatîya Sarvananda (Part II. 2nd Kanda 1—6 Vargas) | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânânda Sarasvatî. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III. 2nd Kanda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV. 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णय: (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचार: (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya) | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुति: (Stuti) by Srî Laghubhattâraka with the commentary of Srî Raghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvati (Part IV) | 1 | 8 | 0 |
| No. 62—सवमतसग्रह: (Sarvamatasangraha) | 0 | 8 | 0 |

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*